


SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:9, Issue: 8
November-2022, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

नवम्बर् २०२२

रू. २०/-

## तिरुमल श्रीस्वामिनः पुष्पयागमहोत्सवः

०१-११-२०२२

२७-०९-२०२२ तः ०५-१०-२०२२ पर्यन्तम् आयोजित तिरुमल श्रीवारि ब्रह्मोत्सव वैभव चित्रमालिका अस्मिन् कार्यक्रमे ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि दम्पत्यौ, ति.ति.दे. कार्यनिर्वहणाधिकारिः श्री ए.वि. धर्मा रेड्डि, इ.डि.इ.एस्., संयुक्तकार्यनिर्वहणादिकारिणः श्री वि.वीरब्रह्मम्. ऐ.ए.एस् श्रीमति सदा भार्गवी, ऐ.ए.एस्., ति.ति.दे. पालकमण्डलि सदस्याः, उन्नताधिकारिणः इतर प्रमुकाः अपिच भक्ताः भागं गृहीतवन्तः।











# गीतामृतम्



अहो वत महत्पापं कर्तुं व्यवसिता वयम्।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः।।

यदि ममप्रतिकारमशस्त्रं शस्त्रपाणयः।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्।।

(भगवद्गीता ४५- ४६-१)

हे कृष्ण! यदि मां धृतराष्ट्र पुत्राः आयुधैः सह
युद्धरङ्गे संहरिष्यन्त्यपि वरमेव मम ।

# सङ्कीर्तनम्

श्रीवेङ्कटेशमहिषी श्रितकल्पवल्ली
पद्मावती विजयतामिह पद्महस्ता।
श्रीवेङ्कटाख्य धरणीभृदुपत्यकायां
या श्रीशुकस्य नगरे कमलाकरेभूत्।।

भगवति जय जय पद्मवति हे।
भागवतनिकर बहुतर भवकर बहुलोद्यमयम सद्मायति हे।
भविजन भयनाशि भाग्यपयोराशि
वेलातिगलोल विपुलतरोल्लोल वीचिलीलावहे।
पद्मजभवयुवति प्रमुखामरयुवति परिचारकयुवति वितति सरति
सतत विरचित परिचरण चरणाम्भोरुहे।
अकुण्ठवैकुण्ठ महाविभूतिनायकी।
अखिलाण्डकोटि ब्रह्माण्डनायकी।
श्रीवेङ्कटनायकी। श्रीमति पद्मावती। जय विजयीभव।।



(श्री लक्ष्मी गद्यम्)



# पद्मावती ब्रह्मोत्सवाः

## सम्पादकीयम्

कलियुग प्रत्यक्षदैवं वेङ्कटेश्वरस्य हृदयदेवेरी श्रीपद्मावती माता। एषा माता तिरुपति पट्टणस्य समीपे स्थित तिरुचानूरु मध्ये विराजमाना अस्ति। प्रतिवर्षं यथा तिरुमलायां श्रीनिवासस्य वार्षिक ब्रह्मोत्सवाः प्रचलन्ति तथा एव श्रीपद्मावती मातायाः ब्रह्मोत्सवाः अङ्गरङ्ग वैभवने प्रचलन्ति। एषु ब्रह्मोत्सवेषु अन्तिमे दिने **पञ्चमीतीर्थं** भवति। कार्तिकब्रह्मोत्सवेषु अस्य उत्सवस्य अधिक प्राधान्यता वर्तते। इमे ब्रह्मोत्सवाः विना अवरोधेन, निर्विघ्नेन प्रचलितुं ब्रह्मोत्सवप्रारम्भस्य पूर्वदिने अङ्कुरार्पण कार्यक्रमः आयोजयन्ति। पद्मावती देव्याः उद्यानवनात् सङ्कलित वल्मीकमृत्तिकां शास्त्रोक्त प्रकारेण अलयं प्रति नयन्ति। नवधान्यानि तस्यां मृत्तिकायां निक्षिप्य अङ्कुरार्पण महोत्सवस्य प्रारम्भं कुर्वन्ति। अनन्तरं देवालय अर्चकवर्याः आलये पुण्याहवाचनं, रक्षाबन्धनं इत्यादि वैदिक कार्यक्रमाः आयोजयन्ति। तदनन्तरं देवसेनाधिपतिं विश्वक्सेनं सालङ्कृत्य चतुर्षुमाडवीथिषु उत्सवरूपेण सम्पूज्य ध्वजारोहणं कुर्वन्ति। तदनन्तरं भगवतीं पद्मावतीं विविधरूपैः अलङ्कृत्य अनेकेषु वाहनेषु आरुह्य नवदिनात्मक महोत्सवाः अत्यन्त वैभवेन विश्वमातृरूपेण आचरन्ति। एषु उत्सवेषु अत्यन्त मुख्यतमं पञ्चमीतीर्थम्। तस्मिन् दिने तिरुमल श्री वेङ्कटेश्वरसस्य सन्निधानात् अनेकेषु वम्भपेटिकासु सौमङ्गल्यद्रव्याणि अधिकारिणः आनीय मातरं प्रति समर्पयन्ति। पाञ्चरात्रागम प्रकारेण कार्तिकशुद्धपञ्चमी भगवती पद्मावतीम् अत्यन्त वैभवेन पञ्चामृत द्रव्यैः, तदनन्तरं हरिद्राचन्दनादि सुगन्धद्रव्यैः अभिषिञ्चन्ति। सहस्रशः जनाः विविधेषु राज्येषु आगत्य मातरं द्रष्ट्वा तस्याः अनुगृहीताः भवन्ति। तस्मिन् दिने सायंकाले गजपटम् अवरुह्य ध्वजावरोहण कार्यक्रमः महती आनन्देन निर्वहन्ति। तदनन्तर दिने पूर्ववत्सरे कृताकृत दोषनिवारणार्थं पुष्पयाग महोत्सवं कुर्वन्ति। देशे विविधराज्येषु पुष्पित अनेकशः पुष्पाणि सङ्गृह्य पुष्पयागं निर्वहन्ति। एवं प्रकारेण प्रचाल्यमान ब्रह्मोत्सवेषु सर्वेषां भक्तजनानां मनोकामनं पूरयेयुः इति विश्वजननीम् आनन्ददायिनीं मातरं श्रीनिवासहृदयनिवासिनीं भगवतीं पद्मावतीं सम्पूजयामः।

सर्वेजनाः सुखिनो भवन्तु।
समस्त सन्मङ्गळानि भवन्तु।।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यत्मिकसचित्रमासपत्रिका

## नवम्बर् २०२२

सम्पुटिः-०९ सञ्चिका-०८

श्रीशुभकृत्संवत्सरस्य कार्तिकशुक्लाष्टमी तः
श्रीशुभकृत्संवत्सरस्य मार्गशिरकृष्णाष्टमीपर्यन्तम् - १९४४

**गौरवसम्पादकः:-**
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

**प्रकाशकः - प्रधानसम्पादकः**
डा।। के.राधारमणः, M.A., M.Phil., Ph.D.,

**सम्पादकः -** डा।। वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

**मुद्रापकः -** श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

**छायाचित्रग्रहणम् -** श्री पि.एन्.शेखरः, छायाचित्रग्राहकः,
ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.




**मुखचित्रम् –** श्रीनिवासस्य पुष्पयागमहोत्सवः, तिरुमल।
**अन्तिमरक्षापुटः –** श्रीपद्मावतीदेव्याः पुष्पयागमहोत्सवः, तिरुचानूरु।


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

# जगत्सर्वं शक्तिमयम्

वै.दामोदरम्मा
चरवाणी - ९८४९००५९९७



यथा शक्त्या ब्रह्मा कमलनयनः फालनयनः
**जगत्सृष्टुं पातुं फलममुफलेतुं च कुशलाः।**
**यथाव्याप्तं विश्वं वसन्ति खलु यस्यां जगदिटम्।**
**नमाम्याद्यां देवीं मुकुलितकरस्ता मभयदाम्।।**

यथा शक्त्या ब्रह्मदेवादारभ्य पिपीळिकाः पर्यन्तं चेतनावस्थायां तिष्ठति सा शक्तिः एव जगन्माता इत्युच्यते। सा एव विश्वंसर्वं व्याप्य एतत् कार्यं निर्वहति। एषा एका एव शक्तिः मातृका शक्तिः स्वयं अनेकरुपैः विभज्य एतं सृष्टिं निर्माणं कृत्वा पालनं, पोषणं करोति। सा सर्वत्र व्याप्यतिष्ठति। तस्याः अनन्त शक्तिरूपाणां केचन परिचयम्।

साक्षात् परमशिवस्य स्त्री रूपमेव शक्तिः। तस्याः शक्तिः एव दुर्गा। पण्डिताः सत्वः, रजः, तमः इति त्रयाणां गुणानां मेलनमेव आदिपराशक्तेः भौतिकरुपं भवतीति वदन्ति। अनन्त विश्वस्य अधिनेत्री आदिपराशक्तिः रुपरहित निर्गुण ब्रह्म इति भावना अपि अस्ति। एतां भावनामनुसृत्य आदिपराशक्तिः दिव्यं, स्वच्छं शाश्वतचैतान्यं भवति आदिपराशाक्तिः एव इतरदेवतानां मूलं भवति। आदिपराशक्तिः एव अखण्डसत्यं एषा शाक्तिः सम्पूर्णशाक्तिः भवति। आदिपराशाक्तिः नाम एतत् समस्तविश्वस्य गमन दिव्य शक्तिः। भूमण्डले आदिपराशक्तिः स्त्रीरूपतया अवतरति चेदपि पुरुषावतारे अपि साशक्तिः निगूढतया अस्ति। केवलं सृष्टेः सर्वेषां परिणामानां अपि शक्तिः एव मूलं भवति।

**धरण्यां मातृरुपाणि -**

जगत्सर्वं जगन्मातुः रुपमेव। सा श्रीमाता एव सृष्टिकर्ता इति केचन ज्येष्ठाः वदन्ति। परं तस्य आधारं किम्? अस्माकं भारतावनी एतादृशपुण्यभूमिः भवितुं कारणं किम्? इति सन्देहाः जनयन्ति। एतादृशसन्देहानां समाधानं देवीभागवतं विवरणं ददाति।

भूमण्डले जगन्मातुः रूपाणि सन्तीति कारणेनैव एषा धरणी पुण्यभूमि इव प्रकाशते। लोकपावनी गङ्गा प्रथमं रुपं भवति। सा विष्णुपादोद्भवी, द्रवरूपिणी। घोरपापानि तस्याः मातुः पाद स्पर्शया दूरं गच्छन्ति। गोलोकं गन्तुं गङ्गास्नानं, गङ्गापानं, गोपूजा एव प्रधानसोपानानि भवन्ति। सर्वं नदीनद तीर्थेषु गङ्गा माता एव उन्नता भवति।

अस्माकं भूमिं पवित्रीकरणे मुख्यभूमिका अन्या माता तुलसीमाता। सा विष्णुपादस्थलवासिनी। तपः सिद्धिं प्रापयितुं शक्तिः तुलस्याः अस्ति। भगवतः प्रीतिकराः पुष्पाणां सर्वेषां अपि तुलसी एवपरमोत्तमा भवति। तुलसीं विना सुकर्म भवति चेदपि फलितं न ददाति। मोक्षप्रदायिनी, भूलोके उत्पन्ना कल्पवृक्षमिति तुलस्याः नाम भवति। पुत्रपौत्राभिवृद्धि प्रदाता इति मानसादेव्याः स्थानं भवति।

कश्यपप्रजापतेः पत्नी एव मानसा देवी। परमेश्वरस्य प्रिय शिष्या भवति। सर्वेषां मन्त्राणां अधिदेवता मानसादेवी एव तथैव देवसेना अन्या पवित्रमूर्ती भवति। प्रकृतेः षष्ट्कलायाः रुपमेव देवसेना इति नाम। वृद्धरुपिणी, योगिनी, शिशूनां रक्षणदायी इति देवसेनायाः नाम। स्थल,जल, अन्तरक्षषु अपि शिशूनां रक्षणार्थं तामेव आराधयन्ति। मङ्गळचण्डिका इति देवी, प्रधानशरूपिणी, सा देवी भौमवासरे पूजां स्वीकरोति। ताम् अर्चनं करोति चेत्। स्त्रीणां सकलवाञ्चाः सिध्यन्ति।

सर्वान् रक्षणशक्तीं कालिकायाम् अस्ति। तस्याः युद्धं बहुप्रीतिकरं भवति। तां स्तोत्रैः सन्तृप्तीकर्तुं शक्यते। वसुन्धरा अन्या शक्तिस्वरूपिणी। स्वाहा, स्वधा, शनादेवी, लज्ञादेवी इति देवतामूर्तयः अपि स्वस्य शक्ति प्रभावेन आश्रयनीय जनान् निरन्तरं रक्षणं कुर्वन्ति। एताः मातरः सर्वाः अपि आदिपराशक्तेः प्रधानशरुपाः एव। अतः एव निरन्तरम् एताः अर्चनं करणीयाम्। एतै सह देवतानां जन्मप्रदाता अदिति, गोमाता, सुरभि राक्षसानां माता दिति, सर्पाणां माता कद्रुवा, पक्षीणां माता विनता एताः अपि आदिपराशक्ति अंशावताराः एव।

इतोऽपि स्पष्टतया जगन्माता का इति वक्तुमेव सर्वचैतन्यरूपिण्या सा तां व्यक्तीकृतवती। तानि रुपाण्येव प्रकृति मोहिनी ललिता इति। पूर्णरुपतया प्रकृतिरुपाणि पञ्च सन्ति।



तानि दुर्गा, लक्ष्मी सरस्वती, गायत्री, राधा इति। चैतन्यरूपस्य परमात्मनः मेधासम्पत् एव सरस्वती। तस्याः ग्रहीतः सम्पदः एव लक्ष्मी। सृष्टेः गमनशक्तिः एव दुर्गामाता। परमात्मा स्वस्य तेजो रुपं सूर्यमण्डलमध्ये गायत्रीमाता इव स्थापितवान्। परमात्मा प्रेमैकस्वरूपः अतः ते श्रीकृष्णावतारे राधा तस्य सहकारं कृतवती। अनन्तरं सीता, अनसूयादिसाध्वीमणयः जगन्मातुः कलांशाः। सृष्ट्यां स्थिताः स्त्रियः सर्वाः अपि जगन्मातुः अंशमिव भावनीयम्। महाशाक्तेः विशेषान् व्यासभगवान् स्वयं देवीभागवते उक्तवान्। महाभारते युद्धानन्तरं दुष्टशिक्षणं, शिष्टरक्षणं प्रभवितुं भूभारं न्यूनीकर्तुम् अपि जगन्माताम् एव कारणमिति व्यासभगवान् जनमेजयस्य उक्तवान्। यः आदिपराशक्तिं न आराधयति सः मोक्षं प्राप्तुं अनर्हः। ताम् एकवारमपि प्रार्थ्यते चेदपि महान् वरं प्रसादयति ब्रह्म रुद्रादि देवताः देवनायकाः अपि ताम् अनुसृत्यैव तिष्ठन्ति। सनकसनंदादि मुनीश्वराः वशिष्टादि महर्षयः अपि जगन्मातुः हस्ते क्रीडनकाः एव। अतः सृष्टिसर्वं जगन्मातुः हस्ते अस्ति इति ज्ञात्वा तस्याः अस्माकं मनः समर्पणं करणीयम्। मनसिपूर्णं तां मातरं स्थिरीकरणीयं एतादृशं क्रियते चेत् सर्वत्र विजयमेव प्राप्नुमः। ताम् अर्चनां करणीयम् इति दृढनिश्चयं स्थातव्यम्। तद्वारा सकलसम्पत्प्राप्तिः भवति। तस्याः भक्तिः इति दक्षिणां समर्प्यते चेत् शोकं दूरं भवति। दीक्षया तां सेव्यते चेत् सकल पापाः नश्यन्ति च।



# श्रीसूक्तश्रीः

डा- वै.नागेन्द्रम्मा
चरवाणी - ८९१९५३८०४०

होम, व्रत आचारादि पूजासन्दर्भेषु उपयुक्तवेदमन्त्रेषु प्रधानतया विराजेते पुरुषसूक्तश्रीसूक्तौ। शैवाः, शाक्तेयाः, वैष्णवाश्च श्रीसूक्तविषये एकामेव पद्धतिमनुसरन्ति। हैन्दवाः श्रीसूक्तविषये जानन्ति। ऋग्वेदे 'खिला' सूक्तेषु श्रीसूक्तमेकम्। खिला इत्युक्ते 'अतुबन्ध' इति। एतत् ऋग्वेदे प्रधानभागेन परिशिष्टमोऽस्ति। रात्रिसूक्तं, शिवसङ्कल्पसूक्तम्, मेधासूक्तम्, इति सर्वाणि खिला सूक्तान्तर्यमेव। सूक्तमित्युक्ते वेदमन्त्रसमाहारम्। सूक्तानां समाहारस्य मण्डलमिति नाम। ऋग्वेदे १०२८ सूक्तानि, १०५५२ मन्त्राः, दशमण्डलानि सन्ति।

श्रीसूक्तं पञ्चममण्डलान्ते षष्ठमण्डलप्रारम्भे दृश्यते एतस्य मण्डलस्य नाम आत्रेयमण्डलामिति नाम। अत्र पञ्चदश (१५) ऋग्मन्त्राः सन्ति। अत एव 'पञ्चदशार्च' इत्युच्यते। पारायणसमये अन्ये श्लोकाः अपि योजिताः। परन्तु ते श्रीसूक्त भागे न गण्यन्ते। सारपदः, श्रेयसः मूलभूतेति कारणात् लोके विशिष्टंस्यानमावहति सूक्तमिदम्।

''या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता' इति मार्कण्डेय पुराणानुसारं सर्वप्राणिषु सैव देवी वर्तते। कालिकापुराणानुसारं आत्माविधा, महाविधा इति नाम्ना आद्रियते।

दक्षिणामूर्तिसंहिता एवं प्रतिपादयति- ''योषत् पुरुषरुपेण स्फुरन्ती विश्वमातृका'' विश्वस्य मूलकारणभूतत्त्वं यदस्ति तदेव तत्त्वं स्त्रीपुरुषरूपेषु विराजते। एवं स्त्रियः 'ई' तत्त्वं पुरुष, प्रकृतिद्वयं सूचयति। अतः वामकेश्वरतन्त्रम् एनां महाशक्तिं परब्रह्म इति सूचयति।

श्रीसूक्तस्य प्रत्येकस्यापि मन्त्रस्य ऋषिः, छन्दः, देवी, विनियोगः च विभिन्नरीत्या वर्तन्ते। अत्र ऋषयः आनन्द, चिक्लति, कर्दम, श्रीद, इन्दिर इति। एते लक्ष्मीदेव्याः पुत्राः इति कथ्यन्ते। समग्रस्य सूक्तस्य द्वे देवते अग्निः, श्रीदेवी च। ''हिरण्यवर्णां सुवर्णरजतस्रजाम्'' इत्यत्र देवी सा सुवर्णमयकान्त्या विराजते। हरिद्रा - रक्तवर्णसाम्मिलितं वर्णं तस्याः इति। वयमपि गुणसम्पन्नं मनुजम् अथवा पुत्रं तेलुगु भाषायां నా బంగారం इति वदामः। नाम गुणसम्पन्नं,

उत्तमं, श्रेष्ठमिति वयं जानीमः। एवमेव हितं, रम्यं हिरण्यम्। एतद्वयमपि यत्र वर्तेते सैव श्रीः।

हरिणीम् - दोषहरिणी, हरति, मनोहारिणी हरिं नयतीप्यर्थाः सन्ति। रागदासः सीतांप्रति "నను బ్రోవమని చెప్పవే సీతమ్మ తల్లి" इति गायति। एवम् एषा देवी हरिं नयति। हरिणी इत्यस्य किरणम् (अंशः) इत्यर्थोऽप्यस्ति। अन्धकारं नाशयति।

**सुवर्ण रजतस्रजाम् -** सुवर्णस्पर्शनेन जलमपि पवित्रं भवति। सूर्यप्रकाशमेव सुवर्णम्। चन्द्रप्रकाशमेव रजतम्। एवं प्राणशक्तिरेव पराशक्तिः। प्रकाशानां स्त्रक्। भगवद्गीतायां श्रीकृष्णोऽपि एवं वदति पञ्चदशाध्योय पुष्णामि चौषधीस्सर्वास्सोमो भूत्वा रसात्मकः इति। एवमेव योगदृष्ट्यापि डडा-पिङ्गल सूर्य-चन्द्र शक्तयः देव्या एव। मूलाधारतः सहस्राधार पर्यन्तं सततं माला इव उच्छ्वासनिश्वासरुपा प्राणशक्तिः तस्या एव। यदि-आह्लादे इति व्युत्पत्या सैव माता अमृतस्वरूपा, प्रसन्नकरा, आह्लादकरा च भासते। सैव देवी सुगुणसम्पन्ना। अतः तस्याराधनेन कर्पूरगन्धः यथा करस्य तथैव सद्गुणा अस्माकमपि आयान्ति। हिरण्मयीम् इत्युक्ते तेजोमयीम् इत्यर्थः। एवमेव अनपगामिनीं सर्वदास्मासु स्थिता। नाम अस्मात् न त्यजति। गाम् - वागैश्वर्यप्रदायिनी डायर्थः। अश्वं नाम सूर्यांशवः अपि च इन्द्रियशक्तयः। अपि च पुरुषाः इत्युक्ते मानवाः(बान्धवाः)। एवं पराशक्त्याः अनुग्रहेण सर्वमपि साधयितुं शक्यमिति ज्ञायते।

**अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्।**
**श्रियं देवीमुपह्वये श्रीर्मादेवीर्जुषताम्।।**

अनेन मन्त्रेण ज्ञायते यत् सैव श्री राज्यलक्ष्म्याः प्रदायिनी भासते। अपि रथमध्या, हस्तिनाद प्रबोधिनी - अत्र देव्याः शक्तिम् एवं ज्ञातुं शक्नुमः - अश्वरूपा पराशक्तिः, सम्पत्करी, गजानां बलाधिदेवता च।

**अभूतमसमृद्धिं च सर्वां निर्णुद मे गृहात्।**

ज्येष्ठलक्ष्मिमहं नाशयामि अपाकरोमि, मम गृहात्, अभाग्यम्, असमृद्धं भवती नाशयतु इति भावः। कर्माधीनं दैवाधीनमिति वयं जानीमः। कर्मणा वयं यत्करणीयं तत् कुर्मः। दैवाधीने यदास्ति तत् अम्बा करोतीति ज्ञायते।

**गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।**
**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।।**

अस्मिन् मन्त्रे गन्धादिकमाकर्षति, ईश्वरी (नियन्ता) सा देवी मनसे काममाकूतिं नाम सङ्कल्पान् - पूरयति वाक् व्यर्थं यथा न भवति तथा रक्षति। ततः

**कर्दमेन प्रजाभूता मयि सम्भव कर्दम।**
**श्रियं वासय मे कुले मातरं पद्ममालिनीम्।।**
**आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे।**
**नि च देवीं मातरं श्रियं वासय मे कुले।।**

इत्यत्र कर्दम इत्युक्ते पङ्कः नाम मृत् पुनश्च जलम् एतद्वयं यदा मिलति तदाङ्कुरः तथैव वंशवृद्धिः इति। चिक्लीत इत्युक्ते मन्मथः मम गृहमागत्य कामान् पूरयतु इत्यर्थम्। तत् धर्माविरुद्धो भूतेषु ... इति गीताचार्यवचनानुसारं धर्मबद्धान् कामानेव पूरयितुं प्रयत्नं कुर्मः। एवं सर्वसम्पद् प्रदात्रीं देवीं शरणं यामः।

एवं शुद्धमनसा यः देव्याः आराधनं करोति सः उन्नतिं प्राप्नोति। त्रिकरणशुद्धिं विना किमपि वा महत्कार्यं क्रियते अपि व्यर्थमेव भवति। अतः पवित्रमनसा दैवमस्माकं हृदये तिष्ठतीति भावना सर्वदा भवेत्। किमपि कार्यं कुर्मः देवः जानाति। अत एव सत्कार्यमेव कुर्मः। तादृशशक्ति प्रदानाय अनन्यमनसा देवीमाराधयामः सकलतां प्राप्नुमः।



# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - आर्.अनन्तकृष्णशर्मा
चरवाणी - ८९७८५८७७५१



(तदनन्तरम्)

तादृशजीवनस्य परमार्थमेव न भवति। अतः केवलं पापकर्म यदि कुर्मः उपर्युक्त दुर्भरजीवनं यापयामः। पुण्यपापमिश्रितं जन्म मानवजन्म प्राप्नुमः। मानव जन्मनि पापमस्तीति कारणात् नैकानि कष्टानि अनुभवन्ति मानवाः। शरीरं रक्षणीयं (पोषणीयम्) कष्टसमयेऽपि साधनीयानि प्रयोजनानि इतरशरीरेषु न सन्ति। देवताशरीरेषु आधारनीयं किमपि नास्ति। तत्रस्य योगाननुभूय पुनः निर्गमनम्। परन्तु मनुष्य शरीरे किमपि साधयितुं शक्यते। किं साधयितुं शक्यते। केवलम् अस्मिन् लोके न, परलोके अपि न। ततः ऊर्ध्वलोके न तत्वज्ञानपर्यन्तम् अनायासेन साधयितुम् एकैकं शरीरं मानवशरीरम् एव। अतः पुण्यकालं, पापफलं द्वयमपि मिलित्वा मिश्रितं, विचित्रं जन्म मानवस्य। अतः पुण्यकर्मणां पुण्यकर्मफलानि पापकर्मणां कानिचन सङ्क्लिष्ट पापानि जायन्ते।

एवंरूपेण कालानिविचित्रानीत्यतः शरीराणी अपि विविधानि वर्तन्ते। एक एव मानवः कर्मत्रयं कर्तुं शक्यते। शुद्धं पुण्यकार्यं कुर्यात्, केवलपापकार्यं नाम तत्र पुण्यलेशमपि न स्यात्। पुनश्च मिश्रितमपि कुर्यात् एवम् अस्माकं कर्मफलानुसारं तादृशविचित्र शरीराणि जायन्ते। एतादृशप्राणिभिः लोके पूर्णः दृश्यते।

अत्युत्कटपापकर्मणा कीदृशं जन्म लभ्यते? नाम नैकप्रकारजन्मानि। नरकमपि प्राप्नुमः अन्ते। सर्वेपापमपि जन्मनाम् अनन्तरं जन्म एकमस्ति। किमित्युक्ते वृक्षजन्म तत्तु गुरूणामपमानेन, पण्डितानां विषये दशितेन मूर्खप्रवर्तनेन च श्मशाने वृक्षजन्म लभते। वृक्ष इत्युक्ते छायां ददाति। परन्तु श्मशाने स्थितवृक्षस्याधः कोऽवा उपविशति? वृक्षं परितः कण्टकानि, वृक्षोपरि गृध्राः भवन्ति। एतादृशं जन्म पापकर्मणा लभते।

अतः वृक्षजन्मानि पापकर्मणः लभते। तादृशजन्म अस्माकं मास्तु, तादृशपापं वयं न कुर्याम। सन्मार्गे गच्छामः पुण्यकलानुसारम् उत्तमजन्मानि प्राप्स्यामःअथवा भगवदनुग्रहेण जन्मराहित्यं वा प्राप्स्यामः तदनुगुणं व्यवहरामः।

(अनुवर्तिष्यते)

२७-०९-२०२२ तः ०५-१०-२०२२ पर्यन्तम् आयोजित तिरुमल श्रीवारि ब्रह्मोत्सव वैभव चित्रमालिका अस्मिन् कार्यक्रमे ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि दम्पत्यौ, ति.ति.दे. कार्यनिर्वहणाधिकारिः श्री ए.वि.धर्मा रेड्डि, इ.डि.इ.एस्., संयुक्तकार्यनिर्वहणादिकारिणः श्री वि.वीरब्रह्मम्.ऐ.ए.एस् श्रीमति सदा भार्गवी, ऐ.ए.एस्., ति.ति.दे. पालकमण्डलि सदस्याः, उन्नताधिकारिणः इतर प्रमुकाः अपिच भक्ताः भागं गृहीतवन्तः।



















# आकाशराजपुत्री तिरुचानूरु पद्मावती

अनन्त ब्रह्माण्डेषु अद्वितीयः भगवान् सप्तगिरिवासः। एनं स्वामिनं स्तोतुं अशक्त्या वेदाः एकमेव वाक्ये ''योऽसि सोऽसि'' इति उक्तवन्तः। इत्युक्ते ''हे स्वामिन् ! त्वं कः असि तदेव त्वम् '' इति। तथा प्रकीर्तित सप्तगिरिवासिनस्य द्वौ पत्न्यौ कलियुगे स्तः तयोः पत्न्योः नामनि पद्मावती एव। एका मृत्तिकायां जाते द्मे नवजातशिशुरूपेण जाता। अपरा जले पद्मे शोडषवर्ष तरुणी रूपेण जाता। तयोः मध्ये अन्तराणि ,बेधाः सन्त्यपि अन्तिमे ते एकत्वेन ममैकत्वेन एकमेव रूपं धृत्वा ''व्यूहलक्ष्मीः'' इति नूतन नाम्ना वेङ्कटेशस्य हृदय पपीठम् अलङ्कृतवन्तौ। तस्मात् तयोः विभोः ''श्रीनिवासः'' इति नामं सार्थकं कृतवन्तौ।

बहु समीचीनमस्ति। अतीव विचित्रेण, आश्चर्येण विद्यमान इमे पद्मावत्योः गाथां सविवरेण ज्ञात्वा आनन्दं प्राप्नुमः।

## आकाशराज पुत्री पद्मावती

तिरुपति पट्टणस्य ५० किं.मि. दूरे विद्यमान नारायणवनस्य प्रभुः आकाशराजः। एषः सन्तानार्थ पुत्रकामेष्ठी यागार्थं भूमिं सीतायामास। तस्यां मृत्तिकायां सुवर्ण पद्मे एका नवजात बालिका लब्धा। पद्मेस्थितां तां बालिकां 'पद्मावती'' इति नाम्ना वर्धयामास आकाशराजः। तस्मिन्नेव समये...

वैकुण्ठं परित्यज्य भूलोकं प्रति आगतां श्रीमहालक्ष्मीम् अनुसृत्य श्रीमहाविष्णुः भूलोकस्थ आदिवराहक्षेत्रं प्राप। माता वकुळाश्रये उषित्वा एकदा व्याह्याळीं प्रति गत वेङ्कटेशः आकाशराजतनयां, पद्मावतीं दृष्ट्वा सम्मोह्य, तया सह उद्वहं कुरु इति, मातरं वकुळां प्रार्थयामास। सा चक्रवर्तेः सुता खलु इति सन्देहां कृता वकुळमातरं प्रति रामायण काले विद्यमान वेदवती एव एषा। तदानीम् एकपत्नी व्रताचरणत्वेन तां वेदवतीम् आगामिनी कलियुगे वेङ्कटेशो नाम्ना उद्वहामि इति प्रतिज्ञयामास। सा एव इदानीं पद्मावतीत्वेन सञ्जता इति वकुळां प्रति उक्त्वा ताम् आकाशराजं प्रति गत्वा सर्वं वृत्तान्तं विनिवेद्य तयोः विवाहम् अकरोत्।

अनन्तरं पद्मावतीं मातरं प्रति प्रतितर्प्य वेङ्कटेशः एवम् उवाच। अम्बा! लोककल्याणार्थम् आगतां महालक्ष्मी इदानीम् अत्र आगन्तव्यम्। सा इदानीं करवीरपट्टणे निवसति अहं तत्र गत्वा तां आनयामि इति उक्त्वा स्वामिनः करवीरपट्टनं प्रति पययौ। परन्तु लक्ष्म्याः अदर्शनमभवत् करवीर पट्टणे। अस्मिन्नेव समये भो! वेङ्कटेश भवते

## तिरुचानूरु पद्मावती

झटिति वेङ्कटेश्वरः सुवर्णमुखी तीरस्थं पद्मसरोवरं प्रति गत्वा द्वादशवर्षात्मककाले महालक्ष्मीं प्रति तपमाचर। एकां कार्तिकशुद्धपञ्चम्यां भृगुवासरे उत्तराषाढनक्षत्रयुक्त अभिजित्लग्ने पद्मसरोवरमध्ये सहस्रदळयुक्त

इदानीम् अत्र महालक्ष्म्याः दर्शनं न भवति सुवर्णमुखी तीरे पद्मसरोवरं निर्माय तपः कुरु सा तत्र प्रत्यक्षो भवति इत्युवाच अशरीरवाणी।सुवर्णपद्मे शोडषवर्ष तारुण्येन दिव्यप्रभासमान महालक्ष्मी आविर्बभूव। जले पद्मे अविर्भूत इमां ''पद्मावती'' इति देवाः प्रकीर्तिताः। अलर्मेल् मङ्गा इत्यादि आहू। इत्युक्ते पुष्पोपरि पकाशमान दिव्यवति इति अर्थः।

देवाः, ऋषयः, यक्षकिन्नेरगन्धर्वाः, मानवाः अपि विविध प्रकारेण पद्मावतीं स्तुतवन्तः

ओम नमश्रितायै लोकधात्र्यैः ब्रह्ममात्रे नमो नमः।
नमस्ते पद्मनेत्रायै पद्ममुख्यै नमो नमः।
प्रसन्नमुख पद्मायै पद्मकान्त्यै नमो नमः।
नमो बिल्ववनस्थायै विष्णुपत्न्यै नमो नमः।
विचित्र क्षौमधारिण्यै पृथुपत्न्यै नमो नमः।
पक्वबिल्व फलापीन तुङ्गस्तन्यै नमो नमः।
सुरक्त पद्म पत्राभ करपादतले शुभौ।
सुरत्नाङ्गद केयूर काञ्चीनूपर शोभिते।।
यक्ष कर्दम संलिप्त सर्वाङ्गे कटकोज्वले।
माङ्गल्याभरणै श्चित्रैः मुक्ताहारै र्विभूषिते।
ताटङ्कै रवतं सैश्च शोभमान मुखाम्बुजे।
पद्महस्ते नमस्तुभ्यं प्रसीद हरिवल्लभे।
ऋग्यजुस्समरूपायै विद्यायै ते नमो नमः।
प्रसीदास्मान् कृपादृष्टिपातै रालोकयाब्धिजे।
ये दृष्टिास्ते त्वया ब्रह्मा रुन्द्रेद्रत्वं समापुनयुः।।

वक्त्राब्धे भाग्यलक्ष्मीः करतलकमले सर्वदा दानलक्ष्मीः।
दोर्दण्डे वीरलक्ष्मीः हृदयसरसिजे भूतकारुण्यलक्ष्मीः
खड्गाग्रे शौर्यलक्ष्मीः निखिलगुणगणाडम्बरे कीर्तिलक्ष्मीः
सर्वाङ्गे सौम्यलक्ष्मीः मयितुविजयतां सर्वसाम्राज्यलक्ष्मीः।

तेलुगु मूलम् - जूलकण्टि बालसुब्रह्मणयम्
संस्कृतानुवादः - डा.ए.वि.किरणः

ब्रह्मादिदेवतानां प्रार्थनया ''अलमेलुमङ्गा' पद्मावती रूपेण अर्चारूपेण भजयति। पूर्वं एषः प्रान्तः श्री शुकमहर्षेः आश्रमः इति वदन्ति। कालान्तरे तिरुशुकनूरु नाम्ना अहूय तदनन्तरं ''तिरुचानूरु'' इति नाम्ना परिवर्तनं जाताम् इति ज्येष्ठानां वचनम्।

तदारभ्य सा आविर्भव कार्तिकशुद्धपञ्चमी पर्यन्तं ब्रह्मादिदेवतानाम् आध्वर्ये तिरुचानूरु पद्मावत्याः उत्सवाः प्रचलन्ति। तदारभ्य पञ्चमी दिने तिरुमलतः श्रीवेङ्कटेश्वरात् साटिका, हरिद्राकुङ्कुमाः इत्यादीनि प्रेषणं सञ्जातम्।

झटिति एव वेङ्कटेश्वरः अलिमेलुमङ्गाम् आलिङ्गनं कृत्वा अस्य हृदये 'व्यूहलक्ष्मी' रुपेण प्रतिष्ठां कृत्वा वेङ्कटाचलं गतवान्। तत्र स्थित आकाशराज पुत्री पद्मावतीमपि व्यूहलक्ष्मी रुपेण तस्मिन् एक्यं अकरोत्। तदारभ्य वेङ्कटेश्वरः श्रीनिवासः इति सार्थकनामधेयः जातः।



२७-०९-२०२२ तः ०५-१०-२०२२ पर्यन्तम् आयोजित तिरुमल श्रीवारि ब्रह्मोत्सव वैभव चित्रमालिका अस्मिन् कार्यक्रमे ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि दम्पत्यौ, ति.ति.दे. कार्यनिर्वहणाधिकारिः श्री ए.वि.धर्मा रेड्डि, इ.डि.इ.एस्., संयुक्तकार्यनिर्वहणादिकारिणः श्री वि.वीरब्रह्मम्.ऐ.ए.एस् श्रीमति सदा भार्गवी, ऐ.ए.एस्., ति.ति.दे. पालकमण्डलि सदस्याः, उन्नताधिकारिणः इतर प्रमुकाः अपिच भक्ताः भागं गृहीतवन्तः।












# श्री ललिता स्वरूपिणी पद्मावती

- के . शिव पार्वती
चरवाणी - ९८४९९५२७३८

श्री पद्मावतीदेवी सर्वेषाम् आराध्यदेवता। त्रिगुणात्मिका, त्रिपुरसुन्दरी, समस्तजगदाधारा, चैतन्यस्वरूपिणी, सृष्टिमूलरूपिणी मूलशक्तिस्वरूपिणी, समस्तशक्तेः आधाररूपिणी साकारबह्मरूपिणी च।

ब्रह्म-अप्रज्ञातम्, अलक्षण् अप्रतवर्यम्, अनिर्वचनीम् अभाव्यं नगमरूपातीतम्, अव्यक्तञ्च। ताट्टक् ब्रह्मतत्वस्य सूक्ष्मातिसूक्ष्मव्यक्तरूपिणी मातृवत्वाभिदायिनी पद्मावती रूपिणी ललितादेवी। पिता अव्यक्तः मातेयं तत् प्रतिनिधिः। जगदव्यक्तरुपस्य प्रथमकिरणरूपिणी तथा प्रधाना, अदिति. चैतन्य रूपिणी, गयत्री इत्यादि नामभि सुगृहीता। इयं त्रिगुणात्मिका सृष्टेर्मूला। त्रिमूर्तीनां जन्ममूला। त्रिशक्तीनामपि जन्ममूला, समस्तसृष्टेरपि मूलाधारा। मायातीताराधनं भक्तानुद्धरयितुमाविर्भूता अनुग्रहरूपिणी। समस्त सृष्टिशक्तीनां प्रणालिः तदधीना। तद्भक्ता शक्ति- भुक्ति- सौन्दर्यरूपिणीं समाराधयन्ति। तस्याः आराधना वैभवोपेता आनन्दभरिता, उल्लसोत्साहसंवर्धिनी भवति। अनन्यरुपिणी साधनोपायेन समुपगृहीता। ललितामातु स्तोत्रेषु ललितासहस्रनाम स्तोत्रं सर्वानधितिष्ठति। इदं स्तोत्रं हयग्रीवः अगस्त्यमहर्षिमुपादिशत्। एतस्मिन् सकल मन्त्र तन्त्र यन्त्र योगसाधनानि सन्निविष्टानि।

ललितासहस्रनाम स्तोत्रे ललितादेवी राजराजेश्वरी, त्रिपुरसुन्दरीति नामानि पार्वतीदेवीस्वरूपं सूचयन्ति। शक्त्याराधनायां, श्रीविद्याराधनायां स्तोत्रस्यास्य प्रामुख्यता वर्तते। स्तोत्र पठनेन सकलशुभावाप्तिः कष्टानां निवृत्तिः, सिद्धयः संसिध्यन्ति मुक्तिरप्यसकृत् साध्यते इति अस्तिकमहाजनानां विश्वासः। ललितासहस्र स्तोत्रं वाणिन्यादि वाग्देवताः (वशिनी कामेश्वरी, अरुण, विमल,जयिनी, मेधिनी सर्वेश्वरी कौलिनी चेति अष्ट वाग्देवताः)। ललितादेव्याः आज्ञानुसारं देवीस्तुत्यर्थम् अपठन्। दुर्गा, काळी, महालक्ष्मी, सरस्वती, भगवती इत्यादि देवतार्चनायामपि ललितासहस्रनाम स्तोत्रं पठन्ति। ललितादेव्याः सहस्रनामानि रहस्यमयानि, ये तावत् भगवन्निष्टा, श्रद्धाभक्ति सम्पन्नाः ते गुरुमुखेन

पञ्चदशाक्षरी मन्त्रोपदेशं सम्पाद्य सुशिव्यतां सम्पादयन्ति तेभ्यः एव निबोधनीयानि इति हयग्रीव समादिशत्। ललितातन्त्रेषु सहस्रनामानि सर्वश्रेष्टानि सन्ति। एतच्छ्रवणेन ललितादेवी सुप्रसन्ना भवति। आदौ श्रीचक्रार्चनं, पञ्चदशाक्षरी जपं जप्त्वा तदनन्तरमेव सहस्रनाम पारायणं करणीयम्। ये तु जपपूजादिकं कर्तुम् असमर्थाः ते नामसहस्रपारायणं कर्तुमहन्ति।



देव्याज्ञानुसारं वशिन्यादि वाग्देवताभिः रचितस्तोत्रस्य पारायणे ललितादेव्याः अनुग्रहः सिध्यति, सकलाभीष्टाः सिध्यन्ति। श्रीदेव्याः आज्ञानुसारं ब्रह्मविष्णुमहेश्वरादि देवताः मन्त्रिणी श्यामलाम्बादि शक्तिरुपाः ललितासहस्रनाम स्तोत्रं सश्रद्धम् अपटन्। एतत् पटनेन जीवनं धन्यतां याति. अपमृत्युः नश्यति, आयुरारोग्यवृद्धिः भवति।

**ललितादेवी -**

रक्तवस्त्रधरा, प्रेमकटाक्षोपेता, पाशाङ्कुशपुष्पेक्षून् चतुर्षु हरतेशु धारयन्ती, अणिमादि अष्टसिद्धिधात्री, (अणिमा, गरिमा, लघिमा, महिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वं वशित्वम् इति अष्टसिद्धयः)। शिवभार्या भवनी एव ललिता।

रावणसंहाराय 'आदिम-हृदय स्तोत्रं पारायणं करणीयम्। तत्स्तोत्रं रामाय उपादिशत् महर्षि अगस्त्यः। तादृसः अगस्त्यः जीवनतत्वावबोधाय आत्मतत्वविज्ञानाय च जरामरणनिवारणाय ललितासहस्रस्तोत्रम् अनुग्रहीतव्यम् इति हयग्रीवम् अभ्युपासयत्।



**सेप्टम्बर् लघुप्रश्नोत्तरी समाधानानि**

१. स्वामिपुष्करिणी २. श्रवणा नक्षत्र ३. अष्टम दिन ४. तरिगोण्ड वेङ्गमाम्बा ५. कृष्णयजुर्वेदस्य ६.मोहिनी ७.मकर कण्ठी ८. धरणी देवी ९. कळ्याणी १०. १९४९ तमे वर्षे ११. शिवः १२. ब्रह्मावराहावतारयोः १३. वकुळा १४. आकाश राजः १५. नव

तिरुमलतिरुपतिदेवस्थानानि

प्रदर्शमान






सप्तगिरेरुपरि भवतां आदराभिमानम् अनन्य समान्यम् ति.ति.दे. पाठकानां मध्ये वारधि इव विराजमान सप्तवर्ण आध्यात्मिक सचित्र मास पत्रिका

# सप्तगिरि पत्रिकायाः मूल्ये परिवर्तनम्।

भवतां गृहं प्रति एव श्रीनिवासस्य आगमनानुभूतिः

सप्तगिरि आध्यात्मिक सचित्र मासपत्रिकायाः कृते शुल्कं दत्वा



श्रीनिवासस्य अक्षरप्रसादं प्रतिमासम् अनुभूयन्तु





# सप्तगिरिः

## आध्यात्मिक सचित्र मास पत्रिका

(तेलुगु, तमिळं, कन्नडं, हिन्दी, आङ्गलं, संस्कृत भाषाः)

..... शुल्क विशेषाः .....

एक पत्रिका प्रतिः रू/- २०

वार्षिक ग्राहकत्वम् रू/- २४०

आजीविक ग्राहकत्वम् रू/- २४००

(१२ वर्ष पर्यन्तम् एव)

शुल्कस्य परिवर्तनं सेप्टम्बर्, २०२२ तः प्रारम्भः। नूतन ग्राहकानां कृते एव एतद् परिवर्तनं भवति।

सङ्केतः

प्रधान सम्पादकः, ति.ति.दे. प्राङ्गणम् मुद्रणा, के.टि.रोड् - तिरुपतिः - ५१७५०१.

दूरभाषा - ०८७७ - २२६४३६३, २२६४५४३, २२६४३५९

# समवायो हि दुर्जयः

## - कविः - विष्णुशर्मा

पुरा एकस्मिन् वृक्षे एका चटका प्रतिवसति स्म। कालेन तस्याः सन्ततिः जाता। एकदा कश्चित् प्रमत्तः गजः तस्य वृक्षस्य अधः आगत्य तस्य शाखां शुण्डेन अत्रोटयत्। चटकायाः नीडं भुवि अपतत्। तेन अण्डानि विशीर्णानि। अथ सा चटका व्यलपत्। तस्याः विलापं श्रुत्वा काष्ठकूटः नाम खगः दुःखेन ताम् अपृच्छत् - ''भद्रे किमर्थं विलपसि?'' इति।

चटकावदत् - ''दुष्टेनैकेन गजेन मम सन्ततिः नाशिता। तस्य गजस्य वधेनैव मम दुःखम् अपसरेत्।'' ततः काष्ठकूटः तां वीणारवा-नाम्न्याः मक्षिकायाः समीपम् अनयत्। तयोः वार्तां श्रुत्वा मक्षिकावदत् - ''ममापि मित्रं मण्डूकः मेघनादः अस्ति। शीघ्रं तमुपेत्य यथोचितं करिष्यामः। तदानीं तौ मक्षिकया सह गत्वा मेघनादस्य पुरः सर्वं वृत्तान्तं न्यवेदयताम्।

मेघनादः अवदत् - ''यथाहं कथयामि तथा कुरुतम्। मक्षिके! प्रथमं त्वं मध्याह्ने तस्य गजस्य कर्णे शब्दं कुरु, येन सः नयने निमील्य स्थास्यति। तदा काष्ठकूटः, चञ्च्वा तस्य नयने स्फोटयिष्यति। एवं सः गजः अन्धः भविष्यति। तृषार्तः सः जलाशयं गमिष्यति। मार्गे महान् गर्त्तः अस्ति। तस्य अन्तिके अहं स्थास्यामि शब्दं च करिष्यामि। मम शब्देन तं गर्तं जलाशयं मत्वा स तस्मिन्नेव गर्ते पतिष्यति मरिष्यति च।'' अथ तथा कृते सः गजः मध्याह्ने मण्डूकस्य शब्दम् अनुसृत्य महतः गर्तस्य अन्तः पतितः मृतः च। तथा चोक्तम् -

'बहूनामप्यसाराणां समवायो हि दुर्जयः'।





# अलिमेलुमङ्गायाः अनुग्रहः

तेलुगु मूलम् - डा.जे.अनील् कुमार्
चित्राणि - श्री के.द्वारकानाथः
संस्कृतानुवादः - जि.विद्यावती
चरवाणी - ८६८६१३१८३३

1 लक्कमाम्बा नारायणसूरि दम्पत्यौ पुत्रेच्छया श्री वेङ्कटेश्वरम् अभजताम्। तयो नन्दकांशेन अन्नमाचार्यः जन्मितवान्।

2 किमपि कार्यं न कृत्वा वृथा गानैः अटन् अष्टवर्षीय अन्नमाचार्यं निन्दन् ''तृणसञ्चयं करोतु'' इति वदन् छुरिकां ददाति।



3 तृणकर्तन समये अङ्गुळी छिन्नं दृष्ट्वा रुदन् सर्वत्र अपश्यत्। दूरात् आगतम् एकं भजनबृन्दं दृष्टवान्। तेषां समीपं गतवान् अन्नमाचार्यः।



कः त्वम्? भवतः नाम किम्? अहो! कः एषः रक्तः इति वदन् अन्नमाचार्यस्य अङ्गुळीं स्पृशन् एव तस्य व्रणं गतम्। 4



5 माम् ''अन्नमाचार्यः'' इति वदन्ति स्वामिन्!



तथा वा! ''यथा अन्नं परब्रह्मस्वरूपम्'' तथा भवान् परब्रह्म। भवतः निजस्थानं श्रीवेङ्कटेश्वरस्य सन्निधिः। तिरुपतिः। वयं तत्रैव गच्छामः। अस्माकम् अनुसर! इति वदन् अग्रे गतवन्तः। 6



किञ्चित् दूरं गत्वा अन्नमाचार्यः तैः सह अचलन् पृष्टतः 7 जातम्। जानुसोपानान् अधिरोहण समये नेत्रेभ्रमन् 'रक्षत, रक्षत' इति उच्चैः रवं कृतवान्।



8 अन्नमाचार्य! उत्तिष्ठतु (इति वाणी श्रुता)



9 अम्बा! का भवती? मम काऽपि न दृश्यते।



10 अहम् अलिमेलुमङ्गा। तव पादरक्षौ त्यक्त्वा पश्यतु। सर्वं दृश्यते।पादरक्षौ विसर्जनात् एव अन्नमाचार्यस्य अलिमेलुमङ्गा साक्षात् कृता।



11 अन्नमाचार्य! बुभुक्षा अस्ति खलु। श्री स्वामिनः प्रसादाः इति वदन् दद्योदनं, चित्रान्नं, मधुर ओदनानि खादयति।



12 झटिति एव अन्नमाचार्यस्य शक्तिः आगतः। उत्साहः जातः। कवित्वम् आगतम्। झटिति अलिमेलुमङ्गां स्तोत्रं कुर्वन् एकं श्लोकशतकम् आशुना अवदत्। अम्बा मोदेन आशीर्वचनं दत्वा अदृश्या अभवत्।



13 ''अदिवो! अल्लादिवो! हरि वासमु'' इति आलापन् पर्वतसोपानान् अधिरोहितवान्।






अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

४





# तिरुमलतिरुपतिदेवस्थानानि



ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

## लघुप्रश्नोत्तरी

१. कुरुवंशस्य मूलपुरुषः कः?
२. कृष्णद्वैपायनः इति कस्य नाम?
३. महाभारतस्य निजनाम किम्?
४. नहुषस्य कुमारः कः?
५. वृषपर्वस्य तनया का?
६. ययातेः पत्नी का?
७. सुभद्रायाः पुत्रः कः?
८. गान्धार्याः सोदरः कः?
९. कुन्त्याः पिता कः?
१०. कुन्त्याः निज नाम का?
११. कौरवाणां सोदरी का?
१२. कुरुवंश राजधानिः कः?
१३. सर्पराजस्य नाम कः?
१४. लक्षागृह निर्माता कः?
१५.द्रोणाचार्यस्य पुत्रः कः?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तानां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपत्रिकानां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।



Subscription Number :
Name :
Mother :
Father :

Address :

Phone Number :



अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?





## रसप्रश्नाः

१. पितुः जरां स्वीकृत्य स्वस्य यौन्वनं कः दत्तवान्?

२.श्रीकृष्णस्य चक्रायुधस्य नाम किम्?

३. दुष्यन्तः कस्य वंशीयः?

४.वायु पुत्रः कः?

५.दृपदं कः पराजितवान्?

६. श्रीकृष्णस्य गदायाः नाम किम्?

(समाधानानि - १. पूरुः २. सुदर्शनम् ३. कुरु ४. भीमः ५. अर्जुनः ६. कौमोदकम्)








Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

२७-०९-२०२२ तः ०५-१०-२०२२ पर्यन्तम् आयोजित तिरुमल श्रीवारि ब्रह्मोत्सव वैभव चित्रमालिका अस्मिन् उत्सववारम्भे आन्ध्रप्रदेश राज्यस्य पक्षतः स्वामिनः पीताम्बरान् समर्पित आन्ध्रप्रदेश् राज्यस्य मुख्यमन्त्रिवर्यः श्री वै.एस्.जगन्मोहन् रेड्डि महोदयः। अस्मिन् कार्यक्रमे भागं गृहीतवन्तः कार्यक्रमे ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि दम्पत्यौ, ति.ति.दे. कार्यनिर्वहणाधिकारिः श्री ए.वि.धर्मा रेड्डि, इ.डि.इ.एस्., संयुक्तकार्यनिर्वहणादिकारिणः श्री वि.वीरब्रह्मम्. ऐ.ए.एस् श्रीमति सदा भार्गवी, ऐ.ए.एस्.,ति.ति.दे. पालकमण्डलि सदस्याः, उन्नताधिकारिणः इतर प्रमुकाः अपिच भक्ताः भागं गृहीतवन्तः।


















